# पञ्चतन्त्रकथाः

निरूपकः - विश्वासः



संस्कृतभारती

बेङ्गलूरु

*प्रकाशनम् -*
**संस्कृतभारती**
'अक्षरम्', ८ उपमार्गः, २ घट्टः
गिरिनगरम्, बेङ्गलूरु - ५६० ०८५



प्रथममुद्रणम् - १९९३ - ५०००
द्वितीयमुद्रणम् - १९९५ - ५०००
तृतीयमुद्रणम् - १९९९ - ५०००

मूल्यं - रू. १०:००

*मुद्रणम् -*
स्प्यान् प्रिण्ट्
बसवनगुडि, बेङ्गलूरु - ४

**PANCHATANTRA KATHAH** - A collection of stories from Panchatantra in simple Samskrit, collected by VISHWASA. Publisher - **SAMSKRITA BHARATI** - 'Aksharam', 8th Cross, II Phase, Girinagar, Bangalore - 560 085.
Ph : 6721052 / 6722576

Pages - iv + 36 Price - Rs. 10-00 Third Print - Feb. 1999
Printed at - **SPAN PRINT**, Basavanagudi, Bangalore - 4

# प्रास्ताविकम्

## (प्रथममुद्रणम्)

जगत्प्रसिद्धाः पञ्चतन्त्रकथाः के वा न जानन्ति ? विष्णुशर्मणा संस्कृतभाषया लिखिताः एताः कथाः जगतः सर्वाधिकभाषाभिः अनूदिताः सन्ति ।

पञ्चतन्त्रस्य भाषा अत्यन्तं व्यावहारिकी सरला च । तथापि संस्कृतस्य प्राथमिक-अभ्यासिनां दृष्ट्या तत्र तत्र सा भाषा अपि कठिनायते । अतः तादृशान् अभ्यासिनः मनसि निधाय अत्र अत्यन्तं सरलतया भाषया पञ्चतन्त्रस्य काश्चन कथाः पुनः निरूपिताः सन्ति । एताः कथाः प्राथमिकाभ्यासिनां साहाय्यम् आचरन्ति इति वयं विश्वसिमः ।

कर्णाटकस्य प्रसिद्ध-साप्ताहिक्यां विक्रमपत्रिकायां 'सुगन्ध'-शीर्षके एताः कथाः प्रथमं प्रकाशिताः । पत्रिकायाः सम्पादकस्य श्री बे.सु.ना.मल्यमहोदयस्य स्नेहपूर्वकः आग्रहः एव एतासां कथानां पुनर्निरूपणे कारणम् । अतः कथानां प्रथमप्रकाशकं श्री बे.सु.ना.मल्यमहोदयं कृतज्ञतापूर्वकं स्मरामः ।

श्रीमती नन्दादेवी कथायाः उचितानि चित्राणि लिखित्वा पुस्तकस्य सौन्दर्यं वर्धितवती अस्ति । रक्षापुटस्य कला श्रीमतः लिङ्गदेवरुवर्यस्य । एतौ उभौ अपि कलाकारौ कृतज्ञतापूर्वकं स्मरामः । मुद्रणकार्ये सहकृतवद्भ्यः स्यान्मुद्रणालय-बन्धुभ्यः च वयं कृतज्ञतां समर्पयामः ।

श्रीमुख सं।। निजभाद्रपदपूर्णिमा
३०.९.१९९३

– प्रकाशकः

## (तृतीयमुद्रणम्)

पुस्तकस्य एतस्य जनप्रियता अपूर्वा । अतः एव एतत् तृतीयमुद्रणं प्रवर्तमानम् अस्ति । एतस्य कारणीभूतेभ्यः सर्वेभ्यः सहकारिबन्धुभ्यः वयं कृतज्ञतां समर्पयामः ।

बहुधान्य सं।। माघकृष्णत्रयोदशी
१४.२.१९९९

– प्रकाशकः

# कथासूची

# १. काकस्य उपायः

कश्चन महावृक्षः आसीत् । तत्र एकः काकः पत्न्या सह वसति स्म । तस्य एव वृक्षस्य कोटरे एकः कृष्णसर्पः अपि वसति स्म । यदा काकी प्रसूता भवति तदा कृष्णसर्पः तस्याः शावकान् खादति स्म । एतेन काकः काकी च महत् दुःखम् अनुभवतः स्म ।



अतः एकदा काकः स्वमित्रस्य शृगालस्य समीपं गत्वा उक्तवान् - "भोः मित्र ! सः कृष्णसर्पः कथञ्चित् मारणीयः । उपायं सूचयतु" इति। शृगालः एकम् उपायं सूचितवान्। तत् श्रुत्वा काकः बहु सन्तुष्टः ।

तदनन्तरं काकः उड्डयनं कुर्वन् नगरम् आगतवान्। तत्र महाराजस्य प्रासादस्य सरोवरे अन्तःपुरस्त्रियः जलक्रीडायां मग्नाः आसन् । तासां वस्त्राणि आभरणानि च सरोवरस्य सोपानेषु स्थापितानि आसन् । काकः तत्र गतवान् । एकं सुवर्णहारं स्वीकृत्य अरण्याभिमुखं प्रस्थितवान् । तत् दृष्ट्वा राजभटाः काकम् अनुसृतवन्तः ।

काकः अरण्यम् आगत्य महावृक्षस्य कोटरे तं हारं पातितवान् । स्वयं दूरं गतवान् च । राजभटाः तत्र आगतवन्तः। कोटरे हारं दृष्टवन्तः। तदा तत्र स्थितः कृष्णसर्पः कोपेन बहिः आगतवान् । राजभटाः दण्डप्रहारेण तं मारितवन्तः। हारं च नीतवन्तः।

तदनन्तरं काकः स्वपत्न्या सह सुखेन जीवितवान्।

# २. वञ्चकः बकः

कुत्रचित् अरण्यप्रदेशे एकं सरोवरम् आसीत् । तत्र बहवः जलचराः आसन् । कश्चन बकः अपि तत्र बहुकालतः वसति स्म । कालान्तरे सः बकः वृद्धः अभवत् । वार्धक्ये सः मत्स्यान् ग्रहीतुमपि असमर्थः अभवत् । 'इदानीं कथम् आहारः सम्पादनीयः?' इति चिन्तयन् सः एकम् उपायम् अन्विष्टवान् । सरोवरस्य तीरे स्थित्वा अश्रूणि मुञ्चन् सः रोदितुम् आरब्धवान् ।

तदा एकः कर्कटकः तस्य समीपम् आगत्य पृष्टवान् - "माम ! किमर्थं भवान् रोदनं करोति?" इति ।

तदा बकः उक्तवान् - "अद्य दैवज्ञमुखतः अहम् एकां दुर्वार्तां श्रुतवान् - 'इतः परं द्वादशवर्षपर्यन्तम् अत्र अनावृष्टिः भविष्यति' इति । अस्माकं सरोवरे किञ्चिदेव जलम् अस्ति । शीघ्रमेव तदपि शुष्कं भविष्यति । तदा मम बान्धवाः भवन्तः सर्वे अपि मृताः भविष्यन्ति किल इति मम अतीव दुःखम्" इति ।

तत् श्रुत्वा कर्कटकः तां वार्ताम् अन्यजलचरान् निवेदितवान् । ते सर्वे अपि भीताः बकस्य समीपम् आगतवन्तः । विनयेन तं पृष्टवन्तः - "माम ! अस्माकं प्राणरक्षणार्थं कोऽपि उपायः अस्ति वा?" इति ।

तदा बकः उक्तवान् - ''इतः किञ्चिद्दूरे अन्यत् एकं सरोवरम् अस्ति। तत्र प्रभूतं जलम् अस्ति। तत् कदापि शुष्कं न भविष्यति। यदि भवन्तः मम पृष्ठम् आरोहन्ति तर्हि अहं भवतः सर्वान् तत्र नयामि'' इति।

तदा ते जलचराः महता उत्साहेन तं परितः स्थितवन्तः। बकः तान् पृष्ठे आरोप्य ततः प्रस्थितवान्। किञ्चिद्दूरे एका शिला आसीत्। तत्र तान् स्थापयित्वा सः सन्तोषेण खादितवान्। एवमेव सः बहून् जलचरान् खादितवान्।

एकस्मिन् दिने कर्कटकः उक्तवान् - ''माम! अद्य मां नयतु'' इति। 'अस्तु, अद्य कर्कटकस्य मांसं खादामि' इति चिन्तयित्वा बकः तं पृष्ठे आरोपितवान्, वध्यशिलां प्रति गतवान् च।

कर्कटकः दूरादेव शिलायां पतितानि अस्थीनि दृष्ट्वा बकस्य दुरालोचनां ज्ञातवान्। अतः सः स्व-दन्तद्वयेन बकस्य कण्ठं दृढं गृहीतवान्। वेदनया रोदनं कुर्वन् सः वञ्चकः बकः मृतः।

# ३. नष्टः पिष्टघटः

कस्मिंश्चित् नगरे कश्चन दरिद्रः ब्राह्मणः वसति स्म। सः भिक्षाटनेन जीवनं करोति स्म। कदाचित् सः पिष्टेन पूर्णम् एकं घटं प्राप्तवान्। तं घटं नागदन्ते अवलम्ब्य तस्य अधः उपविश्य सः एकदृष्ट्या घटमेव पश्यति स्म।

एकदा रात्रौ सः चिन्तितवान् - 'यदि देशे दुर्भिक्षः भवेत् तर्हि एतस्य शतरूप्यकाणां मूल्यं भवेत्। तदा अहम् एतत् विक्रीय तेन धनेन अजद्वयं क्रेष्यामि। कालान्तरे तेन अजसमूहः एव भविष्यति। अनन्तरम् अजसमूहं विक्रीय धेनूः क्रेष्यामि। अनन्तरं ताः विक्रीय महिषीः, ताः विक्रीय अश्वान् च क्रेष्यामि। तान् अपि विक्रीय यथेष्टं धनं सम्पादयिष्यामि। बृहत् गृहं निर्मापयिष्यामि। तदा कश्चित् ब्राह्मणः आगत्य रूपवतीं स्वकन्यां मह्यं दास्यति। अनन्तरं मम पुत्रः जनिष्यति। देवशर्मा इति तस्य नामकरणं करिष्यामि। यदा सः जानुभ्यां चलितुं समर्थः भविष्यति तदा अहम् अश्वशालायां पुस्तकं पठिष्यामि। तदा देवशर्मा जानुभ्यां चलन् मम समीपम् आगन्तुम् उद्युक्तः भविष्यति। तदा तं बालं ग्रहीतुं तस्य मातरम् आज्ञापयिष्यामि। यदा सा मम वचनं न श्रोष्यति तदा अहं कोपेन पादप्रहारेण तां दण्डयिष्यामि' इति एवं चिन्तयन् सः पादप्रहारं कृतवान् एव। पिष्टेन पूर्णः घटः पतितः, भग्नः च।



अनागतवतीं चिन्ताम् असम्भाव्यां करोति यः ।
स एव पाण्डुरः शेते देवशर्मपिता यथा ।।

# ४. उपायेन शक्यं सर्वम्

कस्मिंश्चित् अरण्ये भासुरकः नाम सिंहः वसति स्म । सः अतीव शक्तिशाली । भासुरकः प्रतिदिनम् अनेकान् मृगान् विनाकारणं मारयति स्म । एतेन वनस्य अन्ये मृगाः कष्टम् अनुभवन्ति स्म ।

अतः एकदा ते मृगाः सम्भूय गत्वा भासुरकं प्रार्थितवन्तः - ''स्वामिन् ! विनाकारणम् एवं मृगाणां मारणेन भवतः कः लाभः? एकस्य एव मृगस्य खादनेन भवतः उदरं पूर्णं भवति किल ? अतः अद्य आरभ्य भवतः आहारार्थं प्रतिदिनम् एकं मृगं वयमेव प्रेषयिष्यामः । भवान् तं मृगं खादतु । अन्यमृगान् न पीडयतु'' इति ।

तदा भासुरकः उक्तवान् - ''तथैव अस्तु । परन्तु यस्मिन् दिने मम समीपं मृगः न आगमिष्यति, तस्मिन् दिने सर्वान् अपि मृगान् मारयिष्यामि एव'' इति ।

मृगाः तत् अङ्गीकृतवन्तः । ततः आरभ्य प्रतिदिनं जातिक्रमेण एकः मृगः भासुरकस्य आहारत्वेन गच्छति स्म । भासुरकः तं खादति स्म । अन्ये मृगाः निर्भयेन अरण्ये सञ्चरन्ति स्म ।

कदाचित् जातिक्रमेण केनचित् शशकेन भासुरकस्य आहाररूपेण गन्तव्यम् आपतितम् । सः शशकः दुःखेन

सिंहसमीपं प्रस्थितवान् । मार्गे एकः कूपः आसीत् । कूपस्य उपरि गमनसमये शशकः स्वस्य प्रतिबिम्बं तत्र दृष्टवान् । तदा तस्य मनसि एकः उपायः स्फुरितः । 'अहम् भासुरकं एतस्मिन् कूपे पातयामि' इति चिन्तयन् सः विलम्बेन भासुरकस्य समीपं गतवान् ।



'अद्य मृगः समये न आगतः' इति भासुरकः अतीव कुपितः आसीत् । तदा शशकः मन्दं मन्दं गत्वा प्रणम्य तस्य पुरतः स्थितवान् । तं तर्जयन् भासुरकः उक्तवान् - ''रे शशकाधम ! समये आगन्तव्यम् इति परिज्ञानं नास्ति वा

भवतः ? भवान् विलम्बं कृतवान् किल ? अतः प्रथमं भवन्तम् खादित्वा अनन्तरं सर्वं मृगकुलमेव नाशयामि'' इति ।

तदा शशकः विनयेन उक्तवान् - ''स्वामिन् ! मया अपराधः न कृतः । भवतः समीपं समये आगन्तव्यम् इत्येव अहं प्रस्थितः । परन्तु मार्गे अन्यः एकः सिंहः आसीत् । सः मां दृष्ट्वा पृष्टवान् - 'भवान् कुत्र गच्छति ?' इति । 'अहम् भासुरकस्य आहारार्थं गच्छामि' इति उक्तवान् । तदा सः उक्तवान् - 'एतत् मम अरण्यम् । अत्र सर्वे अपि मृगाः मम आज्ञां पालयेयुः । भासुरकः कुत्र अस्ति ? सः चोरसिंहः स्यात् । भवान् तम् अत्र आनयतु । आवयोः मध्ये युद्धं भवतु । युद्धे यः जयति सः एव भवन्तं खादतु' इति । तस्य सूचनानुसारम् अहम् अत्र आगतवान् । अतः एव विलम्बः जातः'' इति ।

''एवं वा ? तर्हि तं सिंहम् इदानीम् एव मारयामि । सः कुत्र अस्ति ? प्रदर्शयतु'' इति भासुरकः उक्तवान् । शशकः तं कूपसमीपं नीतवान् । कूपं प्रदर्शितवान् च ।

भासुरकः तत्र जले स्वस्य प्रतिबिम्बं दृष्टवान् । क्रोधेन गर्जनं कृतवान् । कूपतः इतोऽपि उच्चैः प्रतिध्वनिः आगतः । भासुरकः तं प्रतिबिम्बमेव स्वस्य प्रतिस्पर्धिनं मत्वा तं मारयितुं तस्य उपरि आक्रमणं कृतवान् । कूपमध्ये पतित्वा जले निमग्नः, मृतः च ।

# ५. नष्टा मन्दविसर्पिणी

कश्चन महाराजः आसीत् । तस्य शय्यायां मन्दविसर्पिणी नाम यूका वसति स्म । सा यूका महाराजस्य रक्तम् आस्वादयन्ती सुखेन जीवति स्म ।

एकदा अग्निमुखः नाम कश्चित् मत्कुणः तां शय्याम् आगतवान् । तं दृष्ट्वा मन्दविसर्पिणी उक्तवती - ''भोः मत्कुण! भवान् किमर्थम् अत्र आगतवान् ? भवता अत्र न स्थातव्यम् । शीघ्रमेव इतः गच्छतु'' इति ।

तदा अग्निमुखः उक्तवान् - ''आर्ये ! अहं बहुजनानां रक्तम् आस्वादितवान् । परन्तु कुत्रापि मधुरं रक्तं न लब्धम् । भवती अनुमतिं ददाति चेत् एतस्य महाराजस्य मधुरं रक्तं पीत्वा मम जीवनं सार्थकं करोमि'' इति ।

मन्दविसर्पिणी उक्तवती - ''भोः अग्निमुख ! अहम् अनुमतिं ददामि । परन्तु महाराजः यदा निद्रावशः भवति, तदा अहं प्रथमं तस्य रक्तं पिबामि । तदनन्तरम् एव भवता रक्तं पातव्यम् । त्वरा न करणीया'' इति ।

''अस्तु, अहं तथैव करोमि'' इति अग्निमुखः अङ्गीकृतवान् ।



किञ्चित्कालानन्तरं महाराजः तत्र आगतवान् शय्यायां सुप्तवान् च । महाराजस्य इतोऽपि निद्रा न आगता आसीत् । तदानीमेव जिह्वाचापलं निरोद्धुम् असमर्थः अग्निमुखः तं दष्टवान् । महाराजः झटिति शय्यातः उत्थितवान् । सेवकान् आज्ञापितवान् - ''भोः सेवकाः! शय्यायां किम् अस्ति इति शीघ्रमेव पश्यन्तु'' इति ।

सर्वे अपि सेवकाः सर्वाणि शय्यावस्त्राणि परिशीलितवन्तः । अत्रान्तरे मत्कुणः मञ्चस्य रन्ध्रं प्रविष्टवान् । सेवकाः वस्त्रमध्ये स्थितां मन्दविसर्पिणीं दृष्टवन्तः, मारितवन्तः च ।

एवं दुष्टाय मत्कुणाय आश्रयस्य दानेन मन्दविसर्पिणी स्वयं नष्टा । अतः दुष्टेभ्यः आश्रयः न दातव्यः ।

# ६. नीलभाण्डे पतितः शृगालः

कस्मिंश्चित् वने चण्डरवः नाम शृगालः वसति स्म । एकदा सः आहारम् अन्विष्यन् नगरम् आगतवान् । तं दृष्ट्वा अनेके शुनकाः भषन्तः समीपम् आगतवन्तः । चण्डरवः भीत्या धावितुम् उद्युक्तः । शुनकाः अपि तस्य अनुसरणं कृतवन्तः । चण्डरवः प्राणभयात् धावन् मार्गे दृष्टं रजकगृहं प्रविष्टवान् ।

तत्र नीलरसेन परिपूर्णम् एकं महाभाण्डम् आसीत् । चण्डरवः तस्मिन् भाण्डे पतितवान् । यदा सः भाण्डतः बहिः



आगतः तदा तस्य शरीरं समग्रं नीलवर्णमयम् आसीत्। "एषः एव सः शृगालः" इति अजानन्तः शुनकाः अन्यत्र कुत्रापि गतवन्तः । चण्डरवः इतस्ततः अटन् कथञ्चित् वनम् आगतवान् ।

तत्र अन्ये मृगाः एतं नीलवर्णयुतं शृगालं दृष्ट्वा भीताः पलायनं कुर्वन्ति स्म । तदा चण्डरवः तान् उक्तवान् - "भोः प्राणिनः! भीतिः मास्तु । भवतां सर्वेषां रक्षणार्थम् एव चतुर्मुखः ब्रह्मा मां प्रेषितवान् अस्ति। अतः इतः परम् अहमेव भवतां राजा। मम आज्ञा भवद्भिः पालनीया" इति।

सिंहः, गजः, व्याघ्रः इत्यादयः सर्वे अपि मृगाः तत् अङ्गीकृतवन्तः। एवं चण्डरवः तस्य वनस्य राजा अभवत्। तदनन्तरं सिंहादयः मृगान् मारयित्वा मांसम् आनीय चण्डरवस्य पुरतः स्थापयन्ति । चण्डरवः आनन्देन तत् खादति। एवमेव सः विनायासं सुखेन जीवति स्म।

एकदा चण्डरवः सभायाम् उपविष्टवान् आसीत्। अन्ये प्राणिनः अपि पार्श्वे आसन् । तदा अकस्मात् दूरप्रदेशतः शृगालसमूहस्य कोलाहलः श्रुतः। स्वबान्धवानां ध्वनिं श्रुत्वा चण्डरवस्य महान् आनन्दः जातः। तस्य शरीरं पुलकितम् अभवत् । सः उत्थाय आनन्दातिरेकेण नेत्रे निमील्य तारस्वरेण विरौतुम् आरब्धवान् । तदा सिंहादयः प्राणिनः "एषः सामान्यः शृगालः एव, न तु ब्रह्मणा प्रेषितः" इति ज्ञातवन्तः। अतः एकेन एव प्रहारेण तं मारितवन्तः।

# ७. त्रयः धूर्ताः

कस्मिंश्चित् ग्रामे मित्रशर्मा नाम ब्राह्मणः आसीत् । सः अतीव निर्धनः । कदाचित् सः ग्रामान्तरं गतवान् । तत्रत्यः भूस्वामी अतीव दयालुः आसीत् । सः ब्राह्मणाय दानरूपेण एकम् उत्तमम् अजं दत्तवान् । ब्राह्मणः तम् अजं स्वग्रामम् आनेतुम् उद्युक्तः । परन्तु अजः मार्गे इतस्ततः धावितुम् आरब्धवान् । अतः ब्राह्मणः तम् अजं स्कन्धे निधाय ग्रामाभिमुखं प्रस्थितः ।

तेन एव मार्गेण त्रयः धूर्ताः आगच्छन्ति स्म । ते ब्राह्मणम् अजं च दृष्ट्वा परस्परं चिन्तितवन्तः - 'कथञ्चित् एतं ब्राह्मणं वञ्चयित्वा अजम् अपहराम' इति । अनन्तरं तेषु एकः वेषपरिवर्तनं कृत्वा ब्राह्मणस्य पुरतः आगत्य उक्तवान् - ''भोः ब्राह्मणोत्तम ! किम् एतत् अकार्यं करोति भवान्? शुनकं वहति किल ? एतादृशं लोकविरुद्धं कार्यं न करणीयम् । जनाः यदि पश्यन्ति तर्हि हसन्ति'' इति ।

ब्राह्मणः कोपेन उक्तवान् - ''किं भवान् अन्धः ? अजं शुनकः इति वदति किल ?'' इति ।

''कोपं न करोतु श्रीमन्! भवान् यथा इच्छति तथैव करोतु । भवतः स्कन्धे स्थितः तु शुनकः एव, न तु अजः'' इति उक्त्वा सः धूर्तः गतवान् ।

किञ्चित्कालानन्तरं द्वितीयः धूर्तः आगतवान् । सः ब्राह्मणं दृष्ट्वा आश्चर्यम् अभिनयन् पृष्टवान् - 'किं भोः ब्राह्मणोत्तम! मृतं वत्सं स्कन्धे वहति किल ? एतत् शास्त्रविरुद्धं न वा ? किमर्थं भवान् एवं करोति ?'' इति ।

इदानीं ब्राह्मणस्य मनसि संशयः उत्पन्नः । तथापि सः उक्तवान् - ''किं भोः! भवान् अपि अन्धः वा ? अजं मृतवत्सः इति वदति किल!'' इति ।

धूर्तः - ''क्षम्यताम् । अहम् वस्तुस्थितिम् उक्तवान् । भवान् यथा इच्छति तथा करोतु'' इति उक्त्वा ततः गतवान् ।

पुनः तृतीयः धूर्तः आगतवान् । सः पृष्टवान् - ''भोः ब्राह्मण ! किम् एतत् अकार्यं करोति भवान् ? गर्दभं स्कन्धे वहति किल ? भवतः बुद्धिः नास्ति वा ?'' इति ।

तदा ब्राह्मणः चिन्तितवान् - 'मम स्कन्धे अन्यः प्राणी एव अस्ति इति भाति । एकः शुनकः इति वदति । अन्यः मृतवत्सः इति वदति । एषः गर्दभः इति वदति । अथवा एषः प्राणी मायावी स्यात् । अतः एकैकेन एकैकरूपेण दृश्यते । अतः एषः मया न नेतव्यः' इति । एवं चिन्तयित्वा सः अजं परित्यज्य धावितवान् । ते त्रयः अपि धूर्ताः अजं गृहीत्वा मारयित्वा यथेष्टं खादितवन्तः ।

# ८. कर्कटकस्य उपायः

कस्मिंश्चित् वने एकः वटवृक्षः आसीत् । तस्मिन् वृक्षे बहवः बकाः वासं कुर्वन्ति स्म । वृक्षस्य कोटरे एकः कृष्णसर्पः अपि वासं करोति स्म ।

एकदा कृष्णसर्पः एकस्य बकस्य शावकान् खादितवान् । तदा सः बकः अत्यन्तं दुःखितः अभवत् । सः एकस्य सरोवरस्य तीरम् आगत्य नेत्राभ्याम् अश्रूणि मुञ्चन् स्थितवान् । तदा एकः कर्कटकः तं पृष्टवान् - ''माम! किमर्थं भवान् रोदनं करोति ?'' इति ।

तदा बकः उक्तवान् - ''कृष्णसर्पः मम शावकान् खादितवान् । अतः अहम् दुःखितः अस्मि । तस्य दुष्टसर्पस्य मारणार्थं भवान् एकम् उपायं वदतु'' इति ।

तदा कर्कटकः चिन्तितवान् - 'वस्तुतः एषः बकः अस्माकं जातिवैरी । अतः अहम् कृष्णसर्पं मारयितुं तादृशम् उपायं वदामि, येन बकस्य अपि मरणं भवेत्' इति ।

अनन्तरं सः उक्तवान् - ''माम! भवान् एतस्य नकुलस्य बिलद्वारतः कृष्णसर्पस्य कोटरपर्यन्तम् अपि मत्स्यखण्डान् प्रक्षिपतु । नकुलः तेन एव मार्गेण आगत्य कृष्णसर्पं मारयति'' इति ।



बकः तथैव कृतवान् । नकुलः मत्स्यखण्डान् खादन् अग्रे अग्रे आगत्य कृष्णसर्पस्य कोटरं दृष्टवान् । कृष्णसर्पं मारितवान् । अनन्तरं शनैः शनैः तस्मिन् वृक्षे स्थितान् सर्वान् बकान् अपि मारितवान् ।

# ९. व्यर्थः मूर्खोपदेशः

कश्चन तमालवृक्षः आसीत् । तस्य वृक्षस्य शाखायाम् एकः नीडः आसीत् । तत्र कश्चन चटकः पत्न्या सह वसति स्म । कदाचित् वर्षाकालः आगतः । बहिः सर्वत्र शीतलं वातावरणम् आसीत् । नीडे तु औष्ण्यम् आसीत् । अतः चटकः निरातङ्कः आसीत् ।

तदा कश्चन वानरः तत्र आगतवान् । वृष्ट्या तस्य शरीरं क्लिन्नम् आसीत् । शैत्येन सः कम्पते स्म । सः वानरः दन्तवीणां वादयन्  वृक्षम् आरुह्य उपविष्टवान् ।

तं दृष्ट्वा चटका उक्तवती - ''किं भोः! भवतः हस्तपादसहितं सुदृढं शरीरम् अस्ति । तथापि एकं गृहं निर्माय तत्र वासं कर्तुं भवान् किं न शक्नोति ? किमर्थम् एवं शीतपीडाम् अनुभवति भवान् ?'' इति ।

तत् श्रुत्वा वानरः उक्तवान् - ''रे, अधमे! किमर्थं मौनं न तिष्ठति ? मम विषये भवती किमर्थं चिन्तयति ?'' इति ।

परन्तु चटका मौनं न स्थितवती । पुनः तथैव उपदेशम् आरब्धवती । तदा वानरस्य महान् कोपः आगतः । सः तां शाखाम् आरुह्य चटकायाः नीडं शतधा खण्डशः कृतवान् ।

एवं मूर्खम् उद्दिश्य उपदेशेन चटकायाः नीडः एव नष्टः अभवत् ।

# १०. बलवान् कः ?

पुरातनकाले गङ्गातीरे एकः आश्रमः आसीत् । तत्र याज्ञवल्क्यः नाम महर्षिः वसति स्म । सः कदाचित् श्येनमुखात् पतिताम् एकां मूषिकां दृष्टवान् । करुणया सः तां मूषिकां आश्रमं नीतवान् । तत्र मन्त्रबलेन तां कन्यकां कृतवान् । याज्ञवल्क्यस्य अपत्यानि न आसन् । अतः तां कन्यकां स्वपुत्रीम् इव पालितवान् सः ।

कालान्तरे सा कन्यका विवाहयोग्या जाता । याज्ञवल्क्यः सूर्येण सह तस्याः विवाहं कारयितुम् इष्टवान् । अतः सः पुत्रीं पृष्टवान् - "भवती सूर्यं परिणेष्यति वा ?" इति ।

तदा सा उक्तवती - "अहं सूर्यस्य तापं सोढुं न शक्नोमि । अतः इतोऽपि उत्तमम् अन्यं वरं सूचयतु" इति ।

ऋषिः सूर्यम् एव पृष्टवान् - "भगवन् ! भवतः अपेक्षया उत्तमः वरः कः ?" इति ।

सूर्यः उक्तवान् - "मेघः माम् आच्छाद्य तिष्ठति । सः मम अपेक्षया बलवान्, योग्यः अपि" इति ।

ऋषिः मेघम् आहूतवान् । पुनः पुत्रीं पृष्टवान् - "भवती एतं परिणेष्यति वा ?" इति ।



सा उक्तवती - ''एतस्य वर्णः कृष्णः । अतः एषः मास्तु । इतोऽपि उत्तमं वरं सूचयतु'' इति ।

ऋषिः मेघं पृष्टवान् । मेघः उक्तवान् - ''वायुः सहस्रधा मम विभागं करोति । अतः सः एव मम अपेक्षया बलवान्'' इति ।

ऋषिः वायुम् आहूतवान् । परन्तु पुत्री वायुम् अपि न अङ्गीकृतवती । ''इतोऽपि बलवान् कः अस्ति ?'' इति पृष्टवती ।

''अहं पर्वतं कम्पयितुं न शक्नोमि । अतः पर्वतः एव बलवान्'' इति वायुः उक्तवान् । अनन्तरं ऋषिः पर्वतम् आहूतवान् ।

परन्तु पर्वतः उक्तवान् - ''यद्यपि अहं बलवान्, तथापि मूषिकः मम शरीरे सर्वत्र बिलं करोति । अतः मूषिकः एव मम अपेक्षया बलवान्'' इति ।

ऋषिः मूषिकम् आहूतवान् । पुत्रीं पृष्टवान् - ''भवती एतं परिणेष्यति वा ?'' इति । सा सन्तोषेण अङ्गीकृतवती । अनन्तरं ऋषिः तां मूषिकां कृत्वा मूषकेण सह तस्याः विवाहं कारितवान् ।

# ११. मूर्खम् उद्दिश्य उपदेशः

कश्चन पर्वतः आसीत् । तत्र बहवः वानराः वसन्ति स्म । कदाचित् हेमन्तसमयः प्राप्तः । सर्वत्र वातावरणे अत्यन्तं शैत्यम् आसीत् । हिमपातः अपि भवति स्म । एतादृशं दुस्सहं शैत्यं सोढुम् अशक्ताः वानराः कम्पन्ते स्म ।

एकदा कश्चित् वानरः कुतश्चित् कानिचित् गुञ्जाफलानि आनीतवान् । तानि गुञ्जाफलानि अग्निकणसदृशानि आसन् । अतः वानराः चिन्तितवन्तः - 'एतान् अग्निकणान् मध्ये स्थापयित्वा, परितः शुष्कानि पर्णानि स्थापयित्वा फूत्कारं



कुर्मः चेत् अग्निः उत्पद्यते । तेन वयं शैत्यपीडां दूरीकर्तुं शक्नुमः' इति । एवं चिन्तयित्वा ते गुञ्जाफलानि मध्ये स्थापयित्वा परितः पर्णानि स्थापितवन्तः । फूत्कारं कर्तुम् आरब्धवन्तः । परन्तु महता प्रयत्नेन अपि अग्निः न उत्पन्नः ।

सूचीमुखः नाम पक्षी एतत् सर्वं पश्यन् आसीत् । वानराणां वृथाप्रयासं दृष्ट्वा सः उक्तवान् - "भोः मूर्खाः! एते अग्निकणाः न । अपि तु एतानि गुञ्जाफलानि । भवन्तः किमर्थं व्यर्थश्रमम् अनुभवन्ति ? कुत्रापि गुहायां निर्वातप्रदेशः अस्ति वा इति अन्विष्यन्तु । तत्र गत्वा तिष्ठन्तु" इति ।

तेषु एकः वृद्धः वानरः आसीत् । सः सूचीमुखम् उक्तवान् - "अरे मूर्ख! किं करणीयं, किं न करणीयम् इति वयं सम्यक् जानीमः । भवतः उपदेशः न अपेक्षितः । मौनं इतः गच्छतु" इति ।

परन्तु सूचीमुखः तस्य वाक्यम् अनादृत्य पुनः - "किमर्थं वृथा श्रमम् अनुभवन्ति भवन्तः ?" इति वक्तुम् आरब्धवान् ।

सूचीमुखस्य उपदेशेन कुपितः कश्चन वानरः तं पक्षयोः गृहीत्वा शिलातले घट्टितवान् । तेन घट्टनेन सूचीमुखः मृतः ।

अतः मूर्खम् उद्दिश्य उपदेशः अस्माकं विनाशाय एव भवति ।

# १२. जातिस्वभावः

कस्मिंश्चित् वने एकः सिंहः पत्न्या सह वसति स्म। कालान्तरे तस्य पत्नी पुत्रद्वयं प्रसूतवती। सिंहः प्रतिदिनं मृगान् मारयित्वा मांसम् आनीय पत्नीपुत्रेभ्यः ददाति स्म।

एकदा सिंहः मृगान्वेषणार्थं वने अटति स्म। तत्र सः एकं शृगालशिशुं दृष्टवान्। करुणया तं शिशुम् आनीय पत्न्याः हस्ते दत्तवान्। सा अपि तं शिशुं मारयितुम् न इष्टवती। अतः तं वात्सल्येन स्वपुत्रम् इव पालितवती। स्वपुत्राभ्यां यथा आहारादिकं ददाति तथा शृगालशिशवे अपि ददाति स्म सा। अतः ते त्रयः अपि परस्परं भेदं न जानन्ति स्म। एवमेव ते प्रवृद्धाः।

कदाचित् ते त्रयः अपि वने अटन्ति स्म। तत्र एकः गजः आगतः। गजं दृष्ट्वा सिंहपुत्रौ आक्रमणं कर्तुं सिद्धौ। तदा शृगालपुत्रः - ''भोः, एषः गजः अस्माकं कुलस्य शत्रुः। अतः तस्य पुरतः न गन्तव्यम्'' इति उक्त्वा ततः गृहं प्रति पलायनं कृतवान्। तं दृष्ट्वा निरुत्साहेन सिंहपुत्रौ अपि गृहम् आगतवन्तौ। अनन्तरं तौ - ''भ्राता गजं दृष्ट्वा भीत्या पलायनं कृतवान्'' इति पितरम् उक्तवन्तौ। सिंहः तत् श्रुत्वा कुपितः। सः 'भवद्भ्यां सिंहकुलस्य एव अपमाननं कृतम्' इति पुत्रौ निन्दितवान्।

सिंही श्रृगालपुत्रम् एकान्ते उक्तवती - ''भोः, पुत्र! पुनः कदापि भवान् भवतः भ्रात्रोः उत्साह-भङ्गं मा करोतु'' इति।

तदा कुपितः श्रृगालपुत्रः उक्तवान् - ''अम्ब! किम् अहम् शौर्येण, रूपेण वा ताभ्यां हीनः ? किमर्थं तौ माम् उपहसतः ?'' इति। सिंही मनसि एव हसित्वा तम् उक्तवती -

''शूरोऽसि कृतविद्योऽसि
दर्शनीयोऽसि पुत्रक।
यस्मिन् कुले त्वमुत्पन्नो
गजस्तत्र न हन्यते ।।''

भवान् शूरः अस्ति, भवता विद्याभ्यासः अपि कृतः ! भवान् सुन्दरः अपि अस्ति । तथापि भवान् वस्तुतः श्रृगालपुत्रः । अहं करुणया भवन्तं मम पुत्रमिव पालितवती। परन्तु भवतः श्रृगालकुले जाताः गजं मारयितुं शक्ताः न भवन्ति। भवान् श्रृगालपुत्रः इति मम पुत्रौ यदि जानीतः तर्हि भवन्तं मारयतः एव। अतः तत्पूर्वमेव भवान् इतः गत्वा स्वजातीयैः श्रृगालैः सह वासं करोतु'' इति।

तत् श्रुत्वा श्रृगालपुत्रः लज्जया ततः गतवान्।

# १३. पृच्छकः ब्राह्मणः

कस्मिंश्चित् अरण्ये चण्डकर्मा नाम राक्षसः वसति स्म । कदाचित् कश्चित् ब्राह्मणः तत् अरण्यम् आगतवान् । राक्षसः तं दृष्टवान् । शीघ्रं तस्य स्कन्धम् आरुह्य उपविश्य सः उक्तवान् - 'भोः ब्राह्मण! अग्रे गच्छतु' इति । भीतः ब्राह्मणः अग्रे गतवान् ।

गमनसमये ब्राह्मणः दृष्टवान् यत् राक्षसस्य पादद्वयम् कमलम् इव कोमलम् अस्ति इति । तत् दृष्ट्वा विस्मितः सः राक्षसं पृष्टवान् - ''भोः! भवतः पादद्वयं कथम् एवं कोमलम् अस्ति ?'' इति ।

राक्षसः उक्तवान् - ''मम एकं व्रतम् अस्ति । अहं कदापि आर्द्रपादः भूमिं न स्पृशामि । अतः एव पादद्वयं तथा अस्ति'' इति । अनन्तरं ब्राह्मणः राक्षसात् आत्मनः मोक्षोपायं चिन्तयन् आसीत् ।

किञ्चित्कालानन्तरम् एकं सरोवरं दृष्टम् । तदा राक्षसः - ''भोः ब्राह्मण ! अहं स्नानं देवतार्चनं च कृत्वा आगच्छामि । तावत् भवता अत्रैव स्थातव्यम्'' इति उक्त्वा ब्राह्मणस्य स्कन्धतः अवतीर्य सरोवरं गतवान् । तदा ब्राह्मणः - 'एषः राक्षसः स्नानं देवतार्चनं च कृत्वा मां निश्चयेन खादति । अतः इदानीम् एव मया इतः धावनीयम् । व्रतभङ्गभयात् राक्षसः माम् अनुसर्तुं न शक्नोति' इति



चिन्तयित्वा ततः वेगेन धावितवान् । राक्षसः धावन्तं तं दृष्ट्वा अपि व्रतभङ्गभयात् ग्रहीतुं न अनुधावितवान् । एवं ब्राह्मणस्य प्राणाः रक्षिताः ।

पृच्छकेन सदा भाव्यम् पुरुषेण विजानता ।
राक्षसेन्द्रगृहीतोऽपि प्राणान्मुक्तो द्विजः पुरा ॥

# १४. क्षतचिह्नाङ्कितः कुलालः

कस्मिंश्चित् ग्रामे कश्चन कुलालः वसति स्म । सः प्रतिदिनं घटान् करोति । कदाचित् कार्यमग्नः कुलालः अकस्मात् पार्श्वे स्थितस्य घटस्य उपरि एव पतितः । सः घटः भग्नः अभवत् । घटस्य एकेन खण्डेन कुलालस्य ललाटे महान् क्षतः जातः । रक्तस्रावः अपि जातः । अनन्तरम् औषधोपयोगेन क्षतः उपशान्तः जातः । परन्तु ललाटे क्षतस्य चिह्नं तथैव स्थितम् ।

कालान्तरे तस्तिन् देशे क्षामः आगतः । ग्रामस्थाः जनाः अन्यं देशं गतवन्तः । कुलालः अपि ग्रामं परित्यज्य अन्यं देशं गतवान् । तत्र कस्यापि महाराजस्य सेवकः अभवत् । महाराजः कुलालस्य ललाटे स्थितं क्षतचिह्नं दृष्ट्वा चिन्तितवान् - 'निश्चयेन एषः कश्चित् वीरपुरुषः स्यात् । युद्धसमये एतस्य ललाटे एवं क्षतः जातः स्यात्' इति ।

अतः सः कुलालस्य सम्माननं कृत्वा, स्वयं अन्यान् राजपुत्रान् यथा पश्यति तथा एतम् अपि आदरेण पश्यति स्म । परन्तु अन्ये राजपुत्राः एतस्य विषये असूयां प्रकटयन्ति स्म ।

कदाचित् अन्यदेशस्य महाराजः एतस्य महाराजस्य उपरि आक्रमणं कृतवान् । तदा महाराजः चिन्तितवान् - 'मम

आस्थाने नूतनः वीरपुरुषः यः आगतः अस्ति तं युद्धार्थं प्रेषयामि । सः शत्रुराजं निश्चयेन जयति' इति ।

अनन्तरं सः एकान्ते कुलालं पृष्टवान् - ''भोः वीरपुरुष! कस्मिन् युद्धे भवतः एवं क्षतः जातः ?'' इति ।

तदा कुलालः उक्तवान् - ''महाराज! अहं कश्चन कुलालः, न तु वीरपुरुषः । मम ललाटे स्थितः क्षतः शस्त्रप्रहारेण न जातः, परन्तु घटस्य उपरि पततेन जातः'' इति ।

तदा राजा उक्तवान् - ''अरे धूर्त! भवतः ललाटे स्थितेन क्षतचिह्नेन अहं वञ्चितः । अस्तु, तथापि भवन्तं न दण्डयामि । भवान् शीघ्रमेव इतः गच्छतु । यदि भवान् कुलालः इति अन्ये राजपुत्राः जानन्ति तर्हि ते भवन्तम् उपहसन्ति, मारयन्ति च । तत्पूर्वमेव इतः गच्छतु'' इति ।

लज्जितः कुलालः ततः धावितवान् ।

# १५. दुराशा



पूर्वं कस्मिंश्चित् ग्रामे हरिदत्तः नाम ब्राह्मणः आसीत् । सः कृषिकार्यं करोति स्म । परन्तु दुर्दैववशात् तस्य क्षेत्रे फलसमृद्धिः एव न भवति स्म ।

कदाचित् हरिदत्तः क्षेत्रे कार्यं कुर्वन् आसीत् । तदा सः समीपे विद्यमानस्य वल्मीकस्य उपरि स्थितम् एकं सर्पं दृष्टवान् । चिन्तितवान् च - ''एषः सर्पः मम क्षेत्रपालः

स्यात् । एतत् अजानन् अहम् एतावत्पर्यन्तम् एतस्य पूजां न कृतवान् । अतः एव मम कृषिकार्यं निष्फलं भवति । इतः परम् अहम् एतं पूजयामि'' इति ।

एवं चिन्तयित्वा हरिदत्तः कुतश्चित् किञ्चित् क्षीरम् आनीय पात्रे स्थापयित्वा वल्मीकस्य समीपम् आगत्य उक्तवान् - ''भोः क्षेत्रपाल! भवान् अत्रैव अस्ति इति अहम् एतावत्पर्यन्तं न ज्ञातवान् । अतः पूजां न कृतवान् । क्षम्यताम्'' इति । अनन्तरं पात्रं तत्रैव स्थापयित्वा गृहम् आगतवान् । अनन्तरदिने तत्र गत्वा पश्यति - पात्रे एकः दीनारः आसीत् । सः तं दीनारं स्वीकृतवान् । ततः आरभ्य सः एवमेव प्रतिदिनं क्षीरं समर्पितवान् । एकं दीनारं प्रतिदिनं प्राप्तवान् च । एवमेव कानिचन दिनानि अतीतानि ।

कदाचित् हरिदत्तः ग्रामान्तरं गतवान् । गमनसमये सः क्षेत्रपालस्य पूजां कर्तुं स्वपुत्रं सूचयित्वा गतवान् । सः पुत्रः वल्मीकसमीपं गत्वा क्षीरं स्थापयित्वा आगतवान् । अनन्तरदिने दीनारं प्राप्तवान् । दीनारं दृष्ट्वा सः चिन्तितवान् - ''निश्चयेन एकस्मिन् वल्मीके प्रभूतं दीनाराः सन्ति । अतः एतं सर्पं मारयित्वा सर्वान् दीनारान् स्वीकरोमि'' इति । अनन्तरदिने क्षीरदानसमये सः दण्डेन सर्पं ताडितवान् । सर्पः रोषेण तं दृष्टवान् । तेन सः पुत्रः मृतः ।

एवं सः मूर्खपुत्रः दुराशया स्वयमेव नष्टः ।

# १६. कपोतस्य अतिथिसत्कारः

कश्चन व्याधः आसीत्। सः अतीव दुष्टः निष्करुणः च। एकदा सः वनं गतवान्। तत्र जालं प्रसारितवान्। एका कपोता जाले पतिता। तां कपोतां पञ्जरे स्थापयित्वा व्याधः अग्रे गतवान्।

तदा अकस्मात् महती वृष्टिः आरब्धा। महता वेगेन वायुः वाति स्म अपि। भीतः व्याधः आश्रयम् अन्विष्यन् कस्यचित् महावृक्षस्य अधः आगतवान्। सः उक्तवान् - ''भोः, अत्र यः वासं करोति अहं तं शरणम् आगतः अस्मि। सः मां रक्षतु'' इति।

तस्मिन् वृक्षे एकः कपोतः वासं करोति स्म। सः एव व्याधेन गृहीतायाः कपोतायाः पतिः आसीत्।

कपोतः व्याधस्य पञ्जरे स्थितां पत्नीं दृष्टवान्। तदा सा कपोता पतिम् उक्तवती - ''भोः कान्त! इदानीम् एषः व्याधः शीतार्तः, क्षुधार्तः अस्माकं गृहम् आगतवान् अस्ति। एतस्य सत्कारः भवता करणीयः। व्याधः मां बद्धवान् इति भवान् मा चिन्तयतु। एतस्य सत्कारं करोतु'' इति।

पत्न्याः वचनं कपोतः अङ्गीकृतवान् । सः अङ्गारकम् आनीय शुष्कपर्णैः अग्निं ज्वालितवान् । व्याधम् उक्तवान् - ''भोः व्याध! एतेन अग्निना शीतबाधां दूरीकरोतु'' इति ।



अनन्तरं कपोतः चिन्तितवान् - 'एषः व्याधः मम अतिथिः अस्ति। एषः इदानीं बुभुक्षितः अस्ति। एतस्मै दातुं कोऽपि आहारः अत्र नास्ति। किं करोमि ?' इति।

एवं चिन्तयित्वा सः व्याधम् उक्तवान् - "भोः अतिथिमहाशय! एकं क्षणं तिष्ठतु। इदानीं भवते आहारं सिद्धं कृत्वा ददामि" इति। अनन्तरं कपोतः स्वयम् अग्निं प्रविष्टवान्। "मम मांसं व्याधः खादतु" इति तस्य आशयः आसीत्।

कपोतस्य त्यागं दृष्ट्वा व्याधस्य लज्जा जाता। सः करुणया कपोतां पञ्जरतः बन्धविमुक्तां कृतवान्। तदा पतिविरहपीडिता कपोता अपि अग्निं प्रविष्टवती।

एतत् दृष्टवतः व्याधस्य मनसः परिवर्तनं जातम्। 'एतादृशाः पक्षिणः अपि धर्माचरणं कुर्वन्ति। अहं तु अन्येषां प्राणिनां प्राणापहरणं कुर्वन् अधर्मेण जीवामि। एतत् अनुचितम्' इति चिन्तयित्वा सः व्याधः अपि अग्निं प्रविश्य प्राणार्पणं कृतवान्।

अनन्तरं ते त्रयः अपि स्वर्गं गतवन्तः।

# १७. चत्वारः मूर्खपण्डिताः

कस्मिंश्चित् ग्रामे चत्वारः स्नेहिताः आसन् । तेषु त्रयः शास्त्रेषु पारङ्गताः । परन्तु बुद्धिरहिताः । अपरः तु शास्त्रं किमपि न जानाति । परन्तु बुद्धिमान् ।

एकदा ते चिन्तितवन्तः - 'वयं देशान्तरं गत्वा महाराजस्य पुरतः अस्माकं पाण्डित्यं प्रदर्श्य धनसम्पादनं कुर्मः' इति । एवं चिन्तयित्वा ते देशान्तरं प्रस्थिताः ।



मार्गे ते एकस्य मृतसिंहस्य अस्थीनि दृष्टवन्तः । तदा प्रथमः उक्तवान् - ''भोः स्नेहिताः! अस्माकं विद्यायाः परीक्षां कर्तुम् एकः अवकाशः लब्धः । वयम् एतं सिंहं जीवसहितं कुर्मः'' इति ।

अनन्तरं सः सिंहस्य अस्थीनि योग्यक्रमेण योजितवान् । द्वितीयः तत्र रक्तमांस-चर्मादिकं संयोजितवान् । तृतीयः यदा तस्य जीवदानं कर्तुम् उद्युक्तः तदा शास्त्रज्ञानरहितः चतुर्थः उक्तवान् - ''भोः, यदि एषः सिंहः जीवितः भवति, तर्हि अस्मान् मारयति । अतः तस्य जीवदानं न करणीयम्'' इति ।

तदा तृतीयः उक्तवान् - ''मूर्ख! मया अपि मम विद्यायाः परीक्षा करणीया अस्ति । अतः अहं जीवदानं करोमि एव'' इति ।

तदा चतुर्थः - ''तर्हि एकं क्षणं तिष्ठतु । अहं वृक्षम् आरोहामि'' इति उक्त्वा एकं वृक्षम् आरूढवान् । तृतीयः सिंहस्य जीवदानं कृतवान् । तदा सः जीवितः सिंहः त्रीन् अपि पण्डितान् मारितवान्, तृप्त्या ततः निर्गतः च । अनन्तरं चतुर्थः वृक्षतः अवतीर्य ग्रामम् आगतवान् ।

अतः पण्डिताः वदन्ति - ''विद्यायाः अपेक्षया बुद्धिः एव गरीयसी'' इति ।